अभिनन्दनम् * अभिवादनम् * अभिनन्दनम् * अभिवादनम्



पू. ब्रह्मश्री-विद्यावाचस्पति-पं. दत्तात्रेयशास्त्री कवीश्वर:
स्वातन्त्र्यदिनोत्सवे (१५ ऑगस्ट १९६९) भारतशासनेन
राष्ट्रियपण्डितत्वेन रू. ३००० वर्षासनेन संमानिता:।

अभिनन्दनम् * अभिवादनम् * अभिनन्दनम् *

# शारदा

ऑगस्ट १९६९
भाद्रपद १८९१

संपादकीयम्

## स्वतन्त्रते भगवति ! तारय भारतम् !

भगवति स्वतन्त्रते । १५ ऑगस्ट १९४७ पूर्व-रात्रौ १२-१ वादन-समये भारतमातुः पारतन्त्र्यशृङ्खलाबन्धनं छित्वा कोटि-कोटि-भारतीयैः सायुज्यं सशक्तिकम् आवाहनं कृते समुपस्थित तत्रभवती भारतमन्दिरे । 'स्थिरा भव । शाश्वता भव ।' इति प्रार्थिता सती गतद्वाविंशतिवर्षात्मकं कालम् अत्र भारतवर्षे स्थिता । प्रतिवर्षं स्वातन्त्र्यदिनोत्सवे भारतीयैः सादरं सोत्साहं ससमारोहं पूज्यते स्वातन्त्र्यलक्ष्मीः । उत्सवप्रियाः खलु वयं भारतीयाः ।

परं हर्षोन्मादः कदाचित् प्रमाणाधिक्ये सति मानवं मदोन्मत्तं कुरुते । मानवः विस्मरति स्वात्मानम् । उन्मत्तः पराधीनः सत्वरं भवति । इतरैः चतुरैः सहजतया मतिभ्रष्टः सः कथमपि कुत्रापि लीलया नीयते । विवेकभ्रष्टस्य तस्य अधःपातः शतमुखीभवति ।

ताम् एव विपरीतावस्थां प्राप्तं भारतराष्ट्रम् । विस्मृतं स्वत्वम् । विलयं प्रापितम् अस्माभिः तद् अनितरसाधारणतेजस्कं नः यशःसंरक्षकं राष्ट्रप्रेम । कदाचित् अमेरिकावासिभिः गोधूमदानेन, क्वचिद् रशियाराष्ट्रस्थैः साम्यवाद-मदिरा-समर्पणेन वशीकृताः वयम् ।

विश्वमण्डले सर्वान् साम्यवादपानमत्तान् कृत्वा स्वत्वशून्यान् कर्तुं येन केन प्रकारेण प्रयतनशीलाः साम्यवादैकनिष्ठाः रशिया-चीन-शासकाः । तैः स्वदूतैः वशीकृता भारतमहामात्यपदम् अधिष्ठिता अबला प्रबलीभूय भारतराजधान्यां स्वतन्त्रतादेवतां कलङ्कितां कर्तुं प्रयतनशीला स्वातन्त्र्यलक्ष्मीभक्तान् सर्वान् मन्थरायितेन शोकाकुलीकरोति ।

अबला यत्र प्रबला धूर्ता रशियानुसारिणी नीतिः ।
किं किं तत्र भवेदिति वक्तुं कथमपि हि दुःशकं भवति ।

अतः निर्मलां शुद्ध-सात्त्विक-स्वातन्त्र्य-भक्ति-मूलां सद्बुद्धिं सर्वेभ्यः ...तप्रजाजनेभ्यः समर्प्य तारय भारतम् इति साक्रोशं प्रार्थये ।

* * *

पुणें) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया (मुम्बई
शृङ्गेरी-शारदापीठ-श्रीशंकराचार्यैः संस्कृत-'शंकरकृपा'-त्वेन स्वीकृता

सौर १ भाद्रपद १८९१



# शारदा

संपादकः वसन्त अ. गाडगीळ.

वर्षम् १० अङ्कौ १९-२०

वार्षिकमूल्यम् रू. ८ * अस्य अङ्कस्य रू. ०-८०

## ॥ वन्दे मातरम् ॥

वन्दे मातरम् ॥
सुजलां सुफलाम्
मलयजशीतलाम्
सस्यश्यामलाम्
मातरम् ॥
शुभ्र-ज्योत्स्ना-
पुलकित-यामिनीम्
फुल्ल-कुसुमित-
द्रुमदल-शोभिनीम्
सुहासिनीं सुमधुरभाषिणीम्
सुखदां वरदाम्
मातरम् ॥

वन्दे मातरम्

*******************************************************

१८९१) स्वातन्त्र्य दिन शुभ चिन्तनम् (१९६९

# महाराष्ट्रशासनम् : वेदाभ्यास-केन्द्र-योजना

## अभ्यासक्रमः

### ऋग्वेदः शाकल-शाखा

| वर्षम् | वेदाध्ययनम् | | उपग्रन्थाः | |
|---|---|---|---|---|
| १ | संहिता-अध्यायाः | १-२० | शिक्षादि-चतुष्टयम् | |
| २ | ,, ,, | २१-४० | आश्वलायन-गृह्यसूत्रम् | |
| ३ | ,, ,, | ४१-६० | निरुक्तम् अ. | १-४ |
| ४ | ,, ,, | ६१-६४ | ,, | ५-९ |
| | ऐतरेय-ब्राह्मणपञ्चिका | १-४ | | |
| ५ | ,, ,, ,, | ५-८ | ,, | १०-१४ |
| | ऐतरेयोपनिषद् | | | |
| ६ | पदपाठः अध्यायाः | १-२४ | निविच्चतुष्टयम् | |
| ७ | ,, ,, | २५-४८ | आश्वलायनं श्रौतसूत्रम् | १-६ |
| ८ | ,, ,, | ४९-६४ | ,, | ७-१२ |
| | क्रमपाठः ,, | १-८ | | |
| ९ | ,, ,, | ९-३६ | प्रातिशाख्यम् | |
| १० | क्रमपाठः | अ. ३७-६४ | अष्टाध्यायी अध्यायाः | १-४ |
| ११ | जटापाठः | अ. १-३२ | अष्टाध्यायी | ५-८ |
| १२ | ,, ,, | ३३-६४ | छन्दः शास्त्रम् | |
| १३ | घनपाठः ,, | १-३२ | वेदाङ्गज्योतिषम् | |
| १४ | ,, ,, | ३३-६४ | | |

### कृष्णयजुर्वेदः – तैत्तिरीय-शाखा

| वर्षम् | वेदाध्ययनम् | | उपग्रन्थाः |
|---|---|---|---|
| १ | संहिता-काण्ड- | १–२ | शिक्षा |
| २ | ,, ,, | ३–४ | प्रातिशाख्यम् |
| ३ | ,, ,, | ५–७ | सत्याषाढ-स्मार्तसूत्रम् |

| | | |
|---|---|---|
| ४ | ब्राह्मणम् | |
| ५ | ,, | |
| ६ | आरण्यकम् | |
| ७ | पदपाठ-काण्ड | १–३ |
| ८ | ,, ,, | ४–७ |
| ९ | क्रमपाठः ,, | १–७ |
| १० | जटापाठः ,, | १–७ |
| ११ | घनपाठः ,, | १–३ |
| १२ | ,, ,, | ४–७ |

## शुक्ल-यजुर्वेदः ( माध्यदिनः तथा काण्वः )

| वर्षम् | वेदाध्ययनम् | | उपग्रन्थाः |
|---|---|---|---|
| १ | संहिता अध्यायाः | १–२५ | शिक्षा |
| २ | ,, ,, | २६–४० | |
| | पदपाठः ,, | १–१० | सर्वानुक्रमः |
| ३ | ,, ,, | ११–४० | पारस्कर-गृह्यसूत्रम् |
| ४ | क्रमपाठः ,, | १–२५ | प्रातिशाख्यम् |
| ५ | ,, ,, | २६–४० | |
| | जटापाठः ,, | १–१० | |
| ६ | ,, ,, | ११–४० | |
| | घनपाठः ,, | १–१० | |
| ७ | ,, ,, | ११–४० | |
| ८ | शतपथ-ब्राह्मण-काण्ड-संख्या | १– ३ | |
| ९ | ,, ,, ,, | ४– ६ | |
| १० | ,, ,, ,, | ७– ९ | |
| ११ | ,, ,, ,, | १०–१२ | |
| १२ | ,, ,, ,, | १३–१४ | |

## तोचि ज्ञान लाहे १० स एव लभते ज्ञानम् ।

| | |
|---|---|
| साधकाची दशा<br>उदास असावी ।<br>उपाधी नसावी<br>अंतर्बाही ।। | साधकः संप्रवर्तेत<br>औदासीन्येन सर्वदा ।<br>बहिर् वाऽभ्यन्तरं वापि<br>सर्वोपाधि-विवर्जितः ।।१।। |
| लोलुपता काय<br>निद्रेते जिणावे ।<br>भोजन करावे<br>परिमित । | वर्जयेत् सोऽथ लोलुप्त्वं<br>निद्रां तन्द्रां तथा जयेत् ।<br>इदं च लक्षणं ज्ञेयं<br>युक्ताहारो हि साधकः।।२।। |
| एकान्ती लोकान्ती<br>स्त्रियाशी वचन ।<br>प्राण गेल्या जाण<br>बोलो नये ।। | एकान्ते वा जनान्ते वा<br>साधकः साधनोत्सुकः ।<br>न कुर्यात् स्त्रीभिरालापं<br>प्राणैः कण्ठगतैरपि ।।३।। |
| संग सज्जनाचा<br>उच्चार नामाचा ।<br>घोष कीर्तनाचा<br>अहर्निशी ।। | कुर्वीत सज्जनैः सङ्गं<br>गृणीत हरिनाम च ।<br>घोषयीत च देवस्य<br>कीर्तनं स दिवानिशम् ।।४।। |
| तुका म्हणे ऐशा<br>साधनी जो राहे ।<br>तोचि ज्ञान लाहे<br>गुरुकृपा ।। | स एव लभते ज्ञानं<br>य एवं साधनारतः ।<br>प्रसादः सद्गुरोश्चापि<br>यस्मिन्निति तुकामतिः।।५।। |

तुकारामः — डॉ. ग. बा. पळसुले

## बाबा-ताहेर-काव्यम् . . . १०

दिला ! राहे त पुर् खोरा खसक् बे गुज़रगाहे त पुर् औजे फलक् बे ।
गर अज़् दस्ततत् बरायू पोस्तअजतत् । बरफ़गनू ताके बारत् कम्तरक् बे ।।

पन्था मनस्तव तु दुर्गमकण्टकाढ्यः
अत्युन्नतोऽम्बरमिवाक्रमितुं न शक्यः ।।
शक्नोषि चेत् भरमपाकुरु चर्म, देहात् ।
संपत्स्यते हि लघुता मम तेन तूर्णम् ।।११।।

१८-६-३१० गौळीपुरा
गौळा रामय्या वाडा, हैद्राबाद २

न्या. गुण्डेराव हरकारे
निवृत्तः सत्रन्यायाध्यक्षः

## तोचि आवडे देवाला ।

जो आवडतो सर्वाला ।
तोचि आवडे देवाला ।। ध्रु. ।।

दीन-भुकेला दिसता कोणी ।
घास मुखीचा मुखी घालुनी ।
दुःख नेत्रिचे घेता पिऊनी –
फोडि पाझर पाषाणालाऽऽ ।
तोचि आवडे देवाला ।। १

घेउनि पंगू आपल्या पाठी ।
आंधळ्याची होतो काठी ।
पायाखाली त्याच्या साठीऽऽ ।
देव अंथरि निज-हृदयाला ।
तोचि आवडे देवाला ।। २

जनसेवेचे बांधुनि कंकण ।
त्रिभुवन सारे घेई जिंकुन ।
अर्पुन अपुले निज सिंहासनऽऽ
नित भजतो मानवतेला –
तोचि आवडे देवाला ।। ३

कवि :– पी. सावळाराम

## स वै वल्लभो देवानाम् ।

यः प्रेयान् इह सर्वेषाम्
स वै वल्लभो देवानाम् ।।ध्रु.

बुभुक्षितं वा विलोक्य दीनम् ।
दत्ते तस्मै स्वीयं भक्ष्यम् ।
हत्वा दुःखं तस्य समूलम्ऽऽ ।
सुजनीकुरुते यः पाषाणान्–
स वै वल्लभो देवानाम् ।। १

दधाति पृष्ठे दृष्ट्वा पङ्गुम् ।
अन्धस्यार्थे भवति सुकाष्ठम् ।
मार्गे परमेशोऽपि तदर्थम्ऽऽ ।
शय्यां कुरुते स्वप्राणानाम्
स वै वल्लभो देवावाम् ।। २

जनसेवाया व्रतं गृहीत्वा ।
त्रिभुवनमखिलं जयति प्रेम्णा ।
सिंहासनमपि स्वीयं दत्वाऽऽ
सततं भजते यो मानवताम्–
स वै वल्लभो देवानाम् ।। ३

अनुवादकः –पं. दि. अ. पण्ढरपुरे





॥ श्री चन्द्रमौलीश्वरो विजयतेतराम् ॥

॥ श्री द्वारकाधीशो विजयते ॥ ॐ ॥ श्री शारदाम्बा विजयतेतमाम् ॥

# चातुर्मास्यमहोत्सवाऽऽमन्त्रण-पत्रिका



श्रीमत्परमहंस - परिव्राजकाचार्य-
वर्येत्यादि-समस्तबिरुदालङ्कृत-
पश्चिमाम्नाय - श्रीद्वारका-
शा र दा पी ठा धी श्व र
जगद्गुरु श्रीशंकराचार्य-

## श्रीमद् अभिनवसच्चिदानन्दतीर्थस्वामिभिः

विरचिताः श्रीनारायणस्मरणसंसूचिताश्शुभा आशिषस्समुल्लसन्तु।

ऐषमः गुरुपूर्णिमापूजा-चातुर्मास्यव्रतारम्भः गुजरातमध्यवर्ति-जम्बुसरे सं. २०२५ आषाढ शुक्ल पूर्णिमायां मंगलवासरे (ता. २९-७-१९६९) संपन्नः। अतश्शुभे महोत्सवेऽस्मिन् जम्बुसरमागत्य चातुर्मास्य-दर्शन-पूजनादिना कृतार्थयन्त्वाऽऽस्मानं भक्तजना इति सूचनेयं प्रतन्यते।

निवासः जम्बुसर
आषाढ कृष्ण द्वितीया

निवेदकः
**महाबलभट्टः**
मन्त्री

चातुर्मास्य-स्थानम् :

**श्री द्वारकाशारदापीठाधीश्वर श्री जगद्गुरु श्रीशंकराचार्यमहाराज**
**जम्बुसर, भरूच जिला. (गुजरात)**



ॐ

॥ श्रीशृङ्गेरी-श्रीजगद्गुरुमहासंस्थानम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य - पदवाक्यप्रमाणपारावारपारीण - यम - नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठान- निष्ठ-तपश्चक्रवर्त्यनाद्यविछिन्न-श्रीशङ्कराचार्यगुरुपरम्पराप्राप्त- षड्दर्शनस्थापनाचार्य-व्याख्यानसिंहासनाधीश्वर-सकलनिगमा- गमसारहृदय-सांख्यत्रयप्रतिपादक-वैदिकमार्गप्रवर्तक-सर्व- तन्त्रस्वतन्त्रादिराजधानीविद्यानगरमहाराजधानीकर्णा- टकसिंहासनप्रतिष्ठापनाचार्य-श्रीमद्राजाधिराजगुरु- भूमण्डलाचार्य-ऋष्यश्रृङ्गपुरवराधीश्वर-तुङ्ग- भद्रातीरवासि-श्रीमद्विद्याशङ्करपादपद्माराधक- श्रीजगद्गुरुश्रीचन्द्रशेखरभारतीस्वामिगुरुकरकमलसञ्जात-

## श्रीजगद्गुरु-श्रृङ्गेरी-

## श्रीमदभिनवविद्यातीर्थस्वामिभिः

अस्मदत्यन्तप्रियशिष्य **श्री. वसन्तराव अनन्तराव गाडगीळ** श्रेयोभिवृद्धये नारायणस्मरणपूर्वकविरचिताशिषः समुल्लसन्तुराम् ।

श्रीमदद्वैतमतप्रतिष्ठापनाचार्यश्रीमच्छङ्करभगवत्पादैःचतसृषु दिक्षु प्रतिष्ठापितेषु चतुर्षु मठेषु दक्षिणस्यां दिशि विभाण्डकमहर्षेः सूनोः श्रीमद्-ऋष्यश्रृङ्गमुनेः आश्रमे श्रृङ्गगिरिरिति विख्याते पुण्यक्षेत्रे प्रतिष्ठापिते मठे विराजमानं श्रीशारदापीठम् अधिष्ठिता वयम् आसेतोः आचतुहिनाद्रेः भारते निवसतां सकलानाम् आस्तिकमहाजनानां जगत्प्रतिष्ठासाधनयोः प्रवृत्तिनिवृत्तिधर्मयोः श्रद्धाभमोदयपुरस्सरम् अभ्युदयनिःश्रेयसयोरवाप्तये श्रीशारदाचन्द्रमौलीश्वरयोः अहरहः अर्हणमाचरन्तः शुश्रूषया समागतेभ्योऽन्तेवसद्भ्यः औपनिषदं सांख्यं प्रतिपादयन्तो वर्तामहे ।

वयं बदरीकेदारादिपुण्यक्षेत्राणां भागीरथ्यादिपावनतीर्थानां च सेवनं विधाय श्रृङ्गगिरिक्षेत्रं समागताः अस्मिन् सौम्यसंवत्सरे श्रृङ्गगिरिक्षेत्रे नृसिंहवने अस्मदाचार्यसन्निधौ व्यासपूजा-चातुर्मास्य-संकल्पप्रमुखान् धर्मान् निजाषाढपूर्णिमायां कुञ्जवासरे अन्वतिष्ठाम । श्रेयः-प्रतिपादनपटीयांसो व्यासाक्षताः श्रीशारदाप्रसादाश्च प्रहिताः । एतान् सादरम् आदाय आत्मानं कृतार्थयितुं प्रकृतित एव बद्धश्रद्धानां विनेयानाम् अलम् अधिक-विलेखनेन ॥ ॥ इति शिवम् ॥

सौम्य सं. निजाषाढ बहुळ तृतीयायाम्
गुरुवासरे श्रृङ्गगिरितः ॥

॥ श्रीः ॥

## संस्कृत-लेखन-प्रथम-प्रयत्नः

संस्कृताभ्यासे दत्तचित्तेन साङ्गलीनगरस्थेन मित्रवरेण संस्कृत-पत्रलेखने कृतः प्रथम-प्रयत्नः 'शारदा'कारैः सानन्दम् अभिनन्द्यते। कामं सन्तु तत्र द्वित्राः दोषाः। परं प्रयत्नस्तु प्रशंसार्हः। सर्वे शारदोपासकाः संस्कृतेन पत्रव्यवहारं कुर्वन्तु। 'शारदा'कारैः ते सर्वे पुरस्क्रियन्ते।

— संपादकः

ॐ

६१८ दुर्गा निवास,
विश्रामबाग,
सांगली
दि. २५।७।१९६९

श्री. वसन्त गाडगीळ,

संपादक 'शारदा'

अहं तव[1] शारदामासिकस्य वाचकोऽस्मि रसिकः। किन्तु नात्र शक्यं लब्धुं भवतः संस्कृतप्रसारे अग्रेसरः[2] मासिकपत्रः[3]। तस्मात् इच्छामि भवितुं 'शारदायाः' नियमितवाचकः[4]। एतस्मात् ऑगस्टमासात् कृपया स्वीकुरु[5] मम ग्राहकत्वं।

एतद् पत्रानुसारिणं शारदायाः वार्षिकशुल्कमपि 'मनी ऑर्डर' द्वारा प्रेप्यामि[6] तदपि स्वीकारार्हं। मम वसतिस्थलनिर्देशकः[7] (पत्ता) उपरि लिखितः तदस्ति[8] उपयुक्तः मासिकपत्रव्यवहारे।

एतदस्ति[9] संस्कृतलेखनप्रथमप्रयत्नः। प्रमादाः क्षम्याः।

कृपाभिलाषी
डॉ. पु. ज. लिमये
एल्. सी. पी. एस्.

---

अस्मिन् पत्रे केवलम् इदं परिवर्तनं भवतु—

१ भवतां। २ अग्रेसरं। ३ मासिकपत्रं। ४ नियमितवाचकं। ५ स्वीक्रियतां। ६ प्रेषयामि। ७ संकेतः ८ भविष्यति ९ अयम् अस्ति।

## अवेस्ता-परिचयः ....१

पारसिकेषु मन्त्रचतुष्टयं सर्वाधिकपवित्रम् इति आद्रियते। तत्र यथा 'अहू वइर्यो' इति मन्त्रः पारसिकानां गायत्रीमन्त्र एव। अनेन तेषां गायत्री-मन्त्रेण सह नित्यं पाठ्यः निम्नलिखितः मन्त्रः शारदोपासकानां कृते सानुवादं प्रकाश्यते।

— संपादकः

**अवेस्ता —**

अषॅम्[1] वोहू[2] वहिश्तॅम्[3] अस्ती[4]
उश्ता[5] अस्ती[6] उश्ता[7] अह्माइ[8]
ह्यत्[9] अषाइ[10] वहिश्ताइ[11] अषॅम्[12]

— यस्न २८:१२

**संस्कृतम् —**

ऋतम्[1] वसु[2] वसिष्ठम्[3] अस्ति[4]
ओषितृ[5] अस्ति[6] ओषितृ[7] अस्मै[8]
यत्[9] ऋताय[10] वसिष्ठाय[11] ऋतम्[12] ॥

Righteousness is the Supreme Wealth.
(It) is the illumination (of life)
(This) illumination (comes) to that (life) which is righteous for the sake of Supreme Righteousness.

वैदिक-संशोधन-मण्डलम्
गुलटेकडी, पुण्यपत्तनम् ९.

— पं. ना. श्री. सोनटक्के

पत्ररत्नमञ्जूषा...                ॥ श्री : ॥

डॉ. श्री. भा. वर्णेकर महोदयेभ्यः

विहितप्रणामाञ्जलिना कुमारस्वामिना निवेद्यते—

श्रीनन्दनन्दनकृपात्तरसाभिषेक-सेकक्रियाविमलमानससाररसानाम् ।
अज्ञातबन्धुसदृशां सितकीर्तिभाजां केषाञ्चिदेव पुरतश्शतशो नतोऽस्मि ॥

यन्नन्दनन्दनपदाम्बुजदत्तचित्तः यद्रामकृष्णगुरुबोधपवित्रमूर्तिः ।
यन्नव्यभव्यकवितासमुपासकश्च तत्सर्वथानुजमिमं जनमभ्युपेहि ॥

हन्ताद्य तावकमनोहरकाव्यगीतिसंप्रीतिरम्यलहरीषु समाप्लुतोऽहम् ।
सुप्तोत्थितोऽस्मि चिरविस्मृतपद्यकेलिसंस्मारणोपकृतये भवते नमोऽस्तु ॥

"सानन्दोऽभूत् प्रथितयशसा यस्य नाम्ना विवेकः" ।
सान्द्रानन्दास्सरसमधुरां सूक्तिमेनां निशम्य ।
विद्वांसस्ते विबुधविनुतां सुप्रसन्नां सुरीतम् ।
हृद्वाचाभ्यां न खलु निरतं नाभिनन्दन्ति भूयः ॥

पी. एस्. के. शास्त्रिणा तावत् समानीता लघुत्रयी ।
तावकीनाधुना दृष्टा हृष्टानस्मान्निवेदयेत् ॥

शिवाजीचरितं सम्यक् गैर्वाण्यां बध्नता त्वया ।
औचित्यमादृतं जन्मभूमिभाषाभिमानिना ॥

अस्माकं संन्निधिं दध्यात् उपकाव्यं ममापि च ।
सादरानुग्रहोऽस्मासु श्रीधरस्यास्तु सर्वदा ॥

केन्द्रीयविद्यालयः                — व्ही. ए. कुमारस्वामी
विशाखपट्टणम्                    दि. २५-११-१९६८

# अथ विद्यार्थिभारते कम्पूकाव्ये शुल्कवृद्धिर्नाम प्रथमोध्यायः ।

हस्तद्वय-प्रमार्ष्टव्यं कथं नासाचतुष्टयम्
इत्थं प्रतिश्यायरुग्णः पायान्नश्चतुराननः ॥१॥

पाश्चात्याञ्जलिपेयपाननिपुणा उच्छिष्टतुष्टातराः
ज्ञानाभासविलासकर्मनिरता लब्धप्रतिष्ठा भुवि ।
ये भीता इव शास्त्रगौरवभयात् 'स्पष्टार्थ'मेवाश्रिताः
तेभ्योऽपि व्यसनौघनाशनकृते विद्वद्ब्रुवेभ्यो नमः ॥२॥

वेल्लालमुनिरुवाच—

पुरासीच्छरयूतीरे वरतन्तुर्महामुनिः ।
पावने ह्याश्रमपदेऽध्यापयन् शिष्यसत्तमान् ॥३॥

तस्य शिष्यवरः कौत्सो दक्षिणां महतीमदात् ।
रघुराजात् समानीय रत्नकोटीश्चतुर्दश ॥४॥

तत् श्रुत्वा हि तथा चक्रुः सर्वेऽपि मुनयस्तदा ।
नियमावलिकाम् एकां शुल्कनिर्धारणात्मिकाम् ॥५॥

कोटीनां पञ्चकं देयं शिष्येणाध्येतुमिच्छता ।
तत एव प्रवेष्टव्या पर्णशाला नियोजिता ॥६॥

तावदेव पुनर्देयं व्यतीते वर्षपञ्चके ।
अध्यायस्यावसाने च चतुष्कोटिमितं धनम् ॥७॥

तेनान्यायेन महता संक्षुब्धं छात्रमण्डलम् ।
'सम्प'सम्पादने तेषामभूद्धि दृढनिश्चयः ॥८॥

सत्याग्रहो लाक्षणिकः कर्तव्योऽनशनात्मकः ।
निषेधार्थं प्रयोक्तव्यम् अभियानं सघोषणम् ॥९॥

अन्येद्युः सर्वसच्छात्रा एवं निश्चित्य संगताः ।
प्लवङ्गमसहायैश्च सर्वैः संमील्य निर्गतम् ।
हस्ते कृत्वा वृक्षशाखा निषेधोत्साहसूचिकाः ॥१०॥

अभियानं हि तद् दृष्ट्वा श्रुत्वा कोलाहलं ततः ।
सर्वे संरम्भसंभ्रान्ता ऋषयो दुद्रुवुर्भयात् ॥११॥

दुर्वाससाऽपि यत्क्षिप्तं धूमास्त्रं यागसम्भवम् ।
धूमोचितानां छात्राणाम् अकिञ्चित्करमेव तत् ॥१२॥

नक्तं भुक्त्वातिमात्रं तैर्मूलानि च फलानि च ।
उपविश्याश्रमद्वार उपक्रान्तम् उपोषणम् ॥१३॥
प्रस्थापितं तदा सर्वै ऋषिभिश्शिष्टमण्डलम् ।
वसिष्ठप्रमुखं नैकैरन्यैश्च ऋषिभिर्युतम् ॥१४॥
तद् दृष्ट्वा पूजयाञ्चक्रुर्वसिष्ठप्रमुखान् ऋषीन् ।
संक्रुद्धा अपि ते छात्राः परीवादजिहीर्षया ॥१५॥
वसिष्ठेन समारब्धं वक्तुं मधुरया गिरा ।
वत्सा वयं निःस्पृहास्तु किमर्थम् अभिकुप्यते ।
युष्मदात्तं धनं कार्ये भावत्के विनियोक्ष्यते ।
शुल्कं च सर्वम् आप्तव्यं शासनान् नृपतोऽथवा ॥१७॥
वसिष्ठस्य वचः श्रुत्वा छात्रास्तं शरणं ययुः ।
सम्पश्चापि ततस्तेषाम् उपसंहारभाग् अभूत् ॥१८॥

॥ इति श्रीकिञ्चिन्माघविरचिते विद्यार्थिभारते
कम्बूकाव्ये शुल्कवृद्धिर्नाम प्रथमोध्यायः ॥

टिळक-महाराष्ट्र-विद्यापीठम्
पुण्यपत्तनम् ३०

माघशर्मा पित्रे
काव्यतीर्थः

*****************************************************

# संस्कृतं भारतीयराष्ट्रियता च ।

भारतस्यैकताद्य वर्तते । सा कथं कदा वा सम्पादितेति विचारे समुपस्थिते सर्वेङ्कषो विमर्शो जायते यदुपक्रमेऽस्मिन् नास्ति तत्राङ्ग्लानां तेषां भाषाया अनुयायिनां वा कृतित्वम्, अपि तु तेषां भारते प्रादुर्भावात् प्राक् किमपि तत् तत्त्वमासीत् सुप्रकटितं येन निःसन्दिग्धम् इदं प्रोक्तम्—

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद् भारतं नाम भारती यत्र संततिः ।।

बहुविधजनानां देशेऽस्मिन् सा भारतीया संस्कृतिर्विकसिता यस्या आदर्शम् आत्मनीनं कर्तुं ते सर्वे जनाः परस्परं साहचर्यं विदधुरिति भारतीयसंस्कृतेः प्रतिष्ठायाः प्रथमं पदम् । इयमेव भारतीयसंस्कृतिर्भारतस्यैकराष्ट्रियत्वमपि विहितवती । वस्तुतस्तु न कश्चिद्देशो भौगोलिकसीमाभी राष्ट्रमिति नामविशेषमर्हति । अपि तु केनापि संस्कृतिविशेषेण कस्यचिद् भूभागस्य राष्ट्रसंज्ञेति विशेषो जायते । सा संस्कृतिः प्रधानतः संस्कृतसाहित्ये गौणत इतरभाषासाहित्येषु च निहिता वर्तते । यदि नाम संस्कृतमपरा भारतीय-भाषा वोपेक्षिताः स्युः तर्हि भारतीया संस्कृतिरपि मूलत उच्छिन्ना भविष्यति । फलतो भारतस्य भारतीयतापि विनष्टा जायेत । आङ्ग्लभाषाद्वारेण या अन्ताराष्ट्रियसंस्कृतिः प्रचार्यते, तस्याश्चाकचक्येन भारतीयां संस्कृतिं विनाशयितुम् एवाङ्ग्लभाषासमर्थकानां पक्षः प्रवर्तते ।

स्वकीया राजनीतिकी वा सामाजिकी वा संस्कृतिः परेषु देशेषु स्थिरं पदं निदध्यादिति आधुनिकयुगे सर्वेषां प्रबलराष्ट्राणां परमोद्योगो वर्तते । इदमेवोद्दिश्य इङ्गलैण्ड-अमेरिका-जर्मनी-रूसादि-देशानां न केवलं सार्वजनिकसंस्था अपितु शासन-संस्था अपि भारतदेशे स्वल्पमूल्येनोत्कृष्टं साहित्यं विक्रीणन्ति, भारतीयविद्यार्थिनां स्वकीयेषु देशेषु अध्ययनार्थं समृद्धां छात्रवृत्तिम् उपहरन्ति, स्वकीयदेशस्य भाषा-संस्कृतीतिहासादीनां विषयाणाम् अध्यापनार्थं प्राध्यापकान् नियोजयन्ति । 'फोर्ड फाउण्डेशन' इति विख्याता संस्था तदेवोद्देश्यं परमं कृत्वा प्रपञ्चिता ।

राष्ट्रभाषाद्वारेण राष्ट्रिया संस्कृतिः संस्थापनीया यतो नाम राष्ट्रियसंस्कृतिं विना राष्ट्रस्य राजनीतिकम् एकत्वमपि स्वप्नसृष्टिर्भविष्यति, भारतस्य विघटनम् अवश्यं भविता च । सा राष्ट्रिया संस्कृतिः केवलं भारतीयभाषासु सन्निहिता वर्तते । अत एव तासां सर्वासां भाषाणाम् अध्ययनाध्यापनं सविशेषं व्यवस्थापनीयम् । अधुना तासु केवलं संस्कृतस्य

माहात्म्यं भारते सर्वत्र राजते । सा भाषा सर्वासां भारतीयभाषाणां जननीरूपेण वा सहचरीरूपेण वा समादृता । अस्माकं राष्ट्रिय-साहित्यं प्राचीनकालतोऽद्यावधि सविशेषं संस्कृतभाषायामेव वर्तते । नातः परं किमपि सत्यम् । हिन्दी-भाषायाम् अन्यासु वा भारतीयभाषासु सन्ति नामाङ्गुलिगणनीया एव राष्ट्रिय-साहित्य-योग्या ग्रन्थाः, अथ च शतशो ग्रन्था वेदोपनिषद्-रामायण-महाभारतपुराणादयः, अन्ये वा बहुविधविषय-स्पृशो महाकवीनामाचार्याणां च संस्कृतग्रन्था राष्ट्रिय-साहित्य-कोटिमव-गाहन्ते । न केवलं भारतीयभाषासु भाविसाहित्यस्य निर्माणार्थम् अपितु भारतमिति नाम्नः सार्थकतां विधातुमपि संस्कृतभाषाया राष्ट्रियं साहित्यं महनीयम् ।

आङ्ग्लभाषाया अनिवार्यमध्यापनं तु दुराग्रह एव, यतो नाम कापि वैदेशिकी भाषा कस्मिश्चित् स्वतन्त्रदेशेऽनिवार्यरूपेण न ध्रियते । आङ्ग्लभाषा तु केवलं तैर्जनैः पठनीया ये अन्ताराष्ट्रिय-ज्ञान-विज्ञान-समुपासका अन्ताराष्ट्रियां ख्यातिं लब्धुं समुत्सुकाः सन्ति ।

आङ्ग्लभाषा तु भारतीय-संस्कृतेः प्रोच्चाटिनी वर्तते । यदि नाम आङ्ग्लभाषाया भारते सर्वोपरि स्थानं क्रियते, तर्हि त एवाङ्ग्ल-साहित्य-संस्कृति-रञ्जिता जना देशेऽस्मिन् प्रामुख्यं भक्ष्यन्ते, येषामादर्शेन साहचर्येण च वैदेशिकी संस्कृतिर्देशेऽस्मिन् सनातनपदं लप्स्यते । सा स्थितिस्तु भारतस्य भारतीयताम् एव नचिरं निराकुर्यात् ।

सागर-विश्वविद्यालयः — डॉ. रामजी उपाध्यायः
सागर (मध्यप्रदेश) — एम.ए., डी.लिट्.

## शारदा-नूतन-(११)-वर्षारम्भः

भारत-राजधान्यां दिल्ली-नगरे राष्ट्राध्यक्ष-संनिधाने संपत्स्यते ३०० पृष्ठात्मकस्य, १०० म. गान्धीचित्रैः सुशोभितस्य, विविध-साहिती-मण्डितस्य—

## महात्मा-गान्धी-विशेषाङ्क-प्रकाशनम्

सुनिश्चितं शारदा-नूतन-वर्षारम्भे ।

विशेषाङ्कमूल्यम्-दशरूप्यका: (रु. १०) १ ऑक्टोबर १९६९ पूर्वं नूतनस्य एकादश-तम-वर्षस्य वार्षिकमूल्यं (रु. ८) प्रेष्यते चेत् वर्षारम्भ-विशेषाङ्कः विना मूल्यं प्राप्तुं शक्यते ।

o o o o o o o o o o o o o o o o o o o o o o o o o o

स्मर्यताम् त्वर्यताम् स्मर्यताम्

## शारदा-गौरव-ग्रन्थमाला . . . नूतनं रत्नम्

शृङ्गेरी-शारदा-पीठ– 'श्री'–चरणानां
जगद्गुरु-श्रीशंकराचार्य– महाराजानां
प्रेरणाम् आदृत्य संकलितं भव्यं प्रकाशनम् ।

श्रीविद्यारण्य स्वामिविरचितः

## ॥ शाङ्कर-दिग्विजयः ॥

(पीठ-चतुष्टय-सचित्र-परिचय-मण्डितः)
मूल्यम्–अष्टरूप्यकात्मकम् रु. ८–००
१ ऑक्टोबर १९६९ पूर्वं मूल्यं प्रेष्यते चेत्
केवलं रूप्यकषट्कम् (रु. ६–००)

**शारदा-कार्यालयः ४२५ सदाशिव, पुण्यपत्तनम् ३०**

## संयोजनीयः सर्वैः सर्वत्र संस्कृत-दिनोत्सवः

**श्रावण पूर्णिमा (१८९०) बुधवासरः २७ ऑगस्ट १९६९**

संसदीय-संस्कृत-परिषदः संयोजनेन भारत-शासनेन संकल्पितः सांवत्सरिकः संस्कृतदिनोत्सवः भारतवर्षे सर्वत्र सर्वैः सोत्साहं संमाननीयः । संयोजनीयाः विविध-संस्कृत-वक्तृत्व-नाटच-गानादि-स्पर्धाः प्रशाला-पाठशाला-महाविद्यालय-विद्यापीठादिषु । प्रेषणीयं संस्कृत-दिनोत्सव- वृत्तं सपदि 'शारदा'-नियतकालिके प्रकाशनार्थम्-संपादकः ।

## महाराष्ट्रशासन-वेदाभ्यास-केन्द्र-योजना

महाराष्ट्रशासनेन केन्द्रशासनव्ययेन प्रारप्स्यन्ते महाराष्ट्रराज्ये चत्वारि वेदाभ्यास-केन्द्राणि यत्र आचार्येभ्यः चतुर्भ्यः प्रत्येकं मासिकं मुद्राणां शतकत्रयं, अष्टवेदाभ्यासक-छात्रेभ्यः प्रत्येकं मासिकं मुद्राणां शतं दित्स्यते । त्वर्यतां योजनासाफल्याय । अधिकं विवरणम्—

**शिक्षण-संचालकः सेण्ट्रल-बिल्डिंग, पुण्यपत्तनम् १ —इत्येभ्यः प्राप्यते ।**

o o o o o o o o o o o o o o o o o o o o o o o o o o o o

**श्रीः**

'शारदा'-संपादकेभ्यः

स्वस्ति ।

सिरैक्यूज विश्वविद्यालये भारतीयच्छात्रोऽहमत्र । वाचितं मया श्री. निक्सनं प्रति भवतां चन्द्रतलीयपट्टे संस्कृताभिलेखस्य कृते निवेदनम् । किन्तु भवति मे मनसि, प्रथमं तु भारतवर्षे संस्कृतस्येव समुद्धरणं करणीयमस्ति । तत्कृते वयमत्र संस्कृतसमर्थकानां-सूचीं कर्तुम् इच्छामः । तत्सूचीं भवन्नाम्नापि चालंकर्तुम् इच्छामः भवदनुमतिपूर्वकम् । अपि च, ये ये संस्कृतसमर्थका जनाः भवतः परिचिताः, किम् उपलभ्यन्ते भवत्सकाशात् तेषां नामानि ? अपि च भवत्पत्रिकाग्राहकानां सूची दिशायामस्यां सहायताकारिणी भविष्यतीत्यपि मन्यामहे ।

बिल्डिंग जे-२ अपार्टमेण्ट २
ओल्ड स्लोलम् हाईट्स्
सरैक्यूज्. एन्. वाय्. १३२१०
(यू. एस्. ए.)

उत्तरं प्रतीक्ष्यमाणस्य
अरविन्द शर्मणः
पत्रमिदम्

# आचार्य प्र. के. अत्रे–प्रशंसा !

'अत्रे'–नाम्नि कुले जातो यो विभाति 'नृसिंह'वत् ।
विक्रमेण च सिंहस्य 'नरश्रेष्ठः' स कीर्तितः ॥१॥
वक्तृत्वेऽद्वितीयो मतो ननु पुनरास्तिक्यवादी सदा ।
मग्नो यः खलु शिक्षणप्रसरणे यो लेखने अग्रणीः ॥
नेता संघटकस्तथा मुदकथासंकीर्तने पण्डितः ।
नाट्ये यत् सततं मुदा हि रमते चित्तं च तल्लीलया ॥२॥
मेघः संचरति स्वयं हि गगनमाषाढमासे यथा ।
प्रेम्णा यः प्रददाति पुष्टिमपरां यः संकटैर्ग्रस्यते ॥
आनन्दं वितनोति हृद्गतभरे योऽपि स्वयं दुःखितः ।
साहित्ये प्रथितस्तु 'केशवसुतः' केनापि नो तुल्यते ॥३॥
हृदये यस्य वाक्प्रीतिर्जिव्हाग्रे च सरस्वती ।
करमध्ये च कर्तृत्वम् 'आत्रेयः' स चिरं भवेत् ॥४॥

५५ अ। ९ माधवदास प्रेमजी चाळ, मुगभाट, गिरगांव, मुम्बई ४

**विनायक विश्वनाथ शहाणे**
एम्. ए.

---

# आचार्य प्र. के. अत्रे-महानिर्याणम्

महाराष्ट्र-भाषा-साहित्य-सम्राट्, दैनिक-मराठा-संस्थापक-संपादकः अलौकिक-पत्र-पण्डितः, मराठी-भाषा-चित्रपट-निर्मातृषु यशोधनः मराठी - रङ्गभूमि - जीवनाधारः 'शारदा'-काराणां भक्तोत्तमः आचार्यः प्रल्हाद केशव अत्रे महोदयः १३ जून १९६९ दिने सहसा स्वर्गतः। शोकाकुलं शारदोपासक-कुलं संस्कृत-राष्ट्रभाषा-समर्थकस्य संस्कृत-विश्व-प्रियस्य महानुभावस्य तस्य अकाले महानिर्याणेन ।



आचार्य प्र. के. अत्रे

## श्रद्धाञ्जलि-सभा

स्वर्गतस्य पत्रपण्डितोत्तमस्य प्र. के. तथा बाबूराय अत्रे महोदयस्य पुण्यस्मृतौ मासिकश्राद्ध-निमित्तेन श्रद्धाञ्जलि-समर्पणार्थं महाराष्ट्र-राजधान्यां मुम्बई-नगर्यां भारतीय-विद्या-भवनस्य गीतामन्दिरे महाराष्ट्रस्थ-विविध-सांस्कृतिक-संस्थानां महती प्रातिनिधिका सभा संयोजिता मुम्बापुरीस्थितेन 'शारदा'-प्रतिनिधिना पं. श्रीपादराय कवीश्वरेण । संस्कृत-विश्व-परिषदः प्रधानसचिवानां महाराष्ट्र-शासन-स्थायि-संस्कृत-समिति-सदस्यानां श्रीमतां जयन्त कृष्ण दवे महोदयानां साभापत्येन संपन्नायाम् अस्यां सभायां निम्नलिखिताभिः संस्थाभिः ऐकमत्येन पारितः शोकप्रस्तावः श्रद्धाञ्जलि-समर्पणपुरस्सरम् ।

## सहभागिन्यः संस्थाः

'शारदा'-(संस्कृत-पक्षिकम्)। भारतीय-विद्या-भवनम्। सुरभारती। सौमैया-संस्कृत-केन्द्रम् । श्रीवत्स-बाल-मन्दिरम् । महाराष्ट्र-संस्कृत-परिषद् । संस्कृत-विद्यापीठम् । अ. भा. संस्कृत-साहित्य-संमेलन-महाराष्ट्र-शाखा। बाल-संस्कृतम् (मासिकम्)। वाणीविहारः (संस्कृत-विद्यालयः)। मसूराश्रमः। उत्कर्ष मन्दिर-प्रशाला (मालाड)। ब्राह्मण-सभा (गिरगांव)। डी. जी. टी. प्रशाला। टिळक-महाराष्ट्र-विद्यापीठम् ।

स्वातन्त्र्यदिन-विशेष-लेखः –

## मराठी-भाषेतर-सेवकानां कृते मराठी-प्रशिक्षणम्

लोकसत्तायां राज्यशासनं लोकभाषायाम् एव इति नीतिम् आदृत्य महाराष्ट्रशासनं यावद् अधिकं सत्वरं 'मराठी'-भाषा-माध्यमेन शासनं कर्तुं बद्धपरिकरम् । भाषा-संचालनालयद्वारा गत सप्तवर्षाणि सेवकानां कृते मराठीभाषाध्यापनवर्गः प्रतिदिनं होरान्तं मुम्बई, पुण्यपत्तनं, नागपुरम्, औरङ्गाबाद इत्यत्र प्रचालितः । १ एप्रिल ६३ तः ३१ मार्च १९६७ इति वर्षचतुष्टये २८ अंशकालिक-मराठी-प्रशिक्षण-वर्गेषु १३४७ सेवकाः, ११२ राजपत्रिताः शासनाधिकारिणः च प्रशिक्षिताः । ततः २१ डिसेम्बर १९६७ तः त्रैमासिकाः पूर्णकालिकाः वर्गाः प्रारब्धाः । अद्य यावत् मुम्बई-पुणें-नागपुर-औरङ्गाबाद-नान्देड-नगरेषु १२ पूर्णकालिकवर्गेषु ३८१ सेवकाः प्रशिक्षिताः ।

देवनागरी-लिपिद्वारा मराठी-प्रशिक्षणं, व्यावहारिकं वक्तव्य-लेखन-साहित्यपरिचयादिरूपम् अध्यापनं, गृहपाठैः प्राप्तज्ञानस्य सुदृढीकरणम् शासनव्यवहारस्य विशिष्टा लेखनप्रणालिः, तान्त्रिकपरिभाषा, पत्रव्यवहार-टिप्पणीलेखनादिविषये मार्गदर्शनम्, '**राजभाषा-परिचय**'–पुस्तकस्य लेखन-प्रकाशनम् इति विशेषाः वर्गस्य ।

एतावता कालेन सपरिश्रमं प्राप्तस्य मराठीभाषा-ज्ञानस्य गच्छता कालेन विस्मरणं मा भवतु एतदर्थं कांचन अनुगामिनीं योजनां सिद्धीकर्तुं दक्षं शासनं मराठी-भाषेतर-सेवकानां मराठीविषयिणीं रुचिम् आदृत्य तेषां सौकर्यार्थं सदैव प्रयतनशीलं जागर्ति ।

---

स्मर्यताम् ! स्मर्यताम् ! स्मर्यताम् !

**शारदा-मुद्रण-सिद्धि-मन्दिरम्, पुण्यपत्तनम् ३०**

॥ श्रीः ॥

## दि बृहन्महाराष्ट्र शुगर सिण्डिकेट लि. पुणे ३०

परि तेचि भक्ति ऐसी । पर्जन्याचीं सुटिका जैसी ॥
धरावाचूनि अनारसी । गतीचि नणे ॥

श्रीज्ञानदेवी ११-६८६

परं सैवात्र भक्तिः स्यान्मदेकविषयान्विता ।
वर्षा न स्याद् यथा नित्यं पृथिवीशरणं विना ॥

स्वातन्त्र्यदिनमङ्गलक्षणे अस्माकं भागधारकेभ्यः
न्यासस्थापकेभ्यः हितचिन्तकेभ्यः च

—हार्दं शुभेच्छापूर्वकम् अभिवादनम्—

## ॥ विजयतेतमां भारतस्वातन्त्र्यलक्ष्मीः ॥

बृहन्-महाराष्ट्रस्थैः मध्यमवर्गीयैः प्रदत्तस्य मूल-धनस्य आधारेण
यशस्वितया प्रचलितः अयं शर्करा-मद्यार्क-कर्मान्तः नाम

**म ध्य म व र्ग भू ष ण म्**

गो. श्री. वाळिम्बे
बी. कॉम्
कार्यदर्शी

शं. ल. लिमये
बी.एस्सी. एल्एल्. बी.
अध्यक्षः

# शारदा-गौरव-ग्रन्थमाला

| पुष्पम् | लेखकः | मूल्यम् |
| --- | --- | --- |
| १. श्रीराजेन्द्रप्रसादचरितम् | पं. वासुदेवशास्त्री लाटकर | ३.०० |
| २. वात्सल्यरसायनम् | प्रा. श्री. भा. वर्णेकर | १.०० |
| ३. शिक्षैषा सात्त्विकी सताम् | प्रा. रं. रा. देशपाण्डे | २.०० |
| ४. श्रीरामकृष्णपरमहंसीयम् | प्रा. श्री. भा. वर्णेकर | १.२५ |
| ५. बालकानां जवाहरः | पं. विघ्नहरि देव | ०.४० |
| ६. श्रीमान् विन्स्टनः चर्चिलः | पं. औदुम्बरकर शास्त्री | ०.६४ |
| ७. अप्पाशास्त्रीः साहित्यसमीक्षा | प्रा. अशोक अकलूजकर | २.०० |
| ८. श्रीशिवराज्योदयम् | डॉ. श्री. भा. वर्णेकर | ८.०० |
| ९. 'समानमस्तु वो मनः' | डॉ. ग. बा. पळसुले | ३.०० |
| १०. मराठी-संस्कृत-शब्दकोषः | जोशी-परांजपे-गाडगीळ | २५.०० |
| ११. भूपो भिषक्त्वं गतः। | पं. ग. पां. लोण्ढशास्त्री | १.०० |
| १२. विनायक-वीर-गाथा | डॉ. ग. बा. पळसुले | ३.०० |
| १३. आङ्ग्ललघुकाव्यानुवादमाला | पं. ल. ज. खरे | २.०० |
| १४. श्रीराजयोगभाष्यम् | डॉ. चिं. त्र्यं. केङ्घे | ५.०० |
| १५. मुक्तक-मञ्जूषा | दि. दा. बहुलीकर | २.०० |
| १६. ललित-गीता-लहरी | पं. ओगेटि परिक्षित् शर्मा | १.५० |
| १७. जैत्र-यात्रा-विलाससारः | श्रीभाष्यस्वामी | १.०० |
| १८. वैशम्पायनजीवनगाथा | पं. का. र. वैशम्पायन | ८.०० |
| १९. संस्कृतस्य प्रगतिपथे कः तिष्ठति? | पं. ल. म. चक्रदेव | २.०० |
| २०. शाङ्करदिग्विजयः | श्रीविद्यारण्यः | ८.०० |

पत्रव्यवहारस्थानम्

'शारदा' कार्यालयः पुण्यपत्तनम् ३०

---

कृपया गताङ्के-पञ्चमे पृष्ठे चतुर्थ-श्लोके
'वन्द्या' इति स्थाने 'विद्या-' इति पठ्यताम्।

— संपादकः।

# पुण्यपत्तन-विद्यापीठस्य वाङ्मयशाखा 'डी. लिट्.' गौरवोपाधिसमर्पणम्

## ( श्री. सिद्धेश्वर विष्णु चित्राव-महोदयेभ्यः )

वाङ्मयशाखाध्यक्षः—

" मान्याः कुलपतिमहोदयाः,

माननीयाः महामहोपाध्यायाः चित्राव-कुलावतंसाः विष्णुतनूजाः सिद्धेश्वरशास्त्रिशर्माणः स्वकीयेन अपूर्वेण ऋग्वेदानुवाद-चरित्रकोशसंपादनादिकार्येण लब्धकीर्तयः, विद्वत्तापूर्णानां संस्कारकरणक्षमाणां च नैकग्रन्थानां निर्मित्या ख्यातनामानः, महाराष्ट्रस्य वयोवृद्धाः ज्ञानवृद्धाः प्राच्यविद्यापण्डितेषु धुरि कीर्तनीयाः च पण्डिताः अन्वर्थविद्यानिधिपदभाजः सन्ति । ते 'डी. लिट्.' इति गौरवोपाधिं सर्वथैव अर्हन्ति इति पुण्यपत्तन-विद्यापीठस्य कार्यकारिण्या संसदा, विद्वत्सभया विधिसभया च निर्णीतमस्ति अविसंवादित्वेन ।



सिद्धेश्वरशास्त्री विष्णु चित्राव

एकोनविंश-शताब्द्यां पुण्यपत्तनीयानां सुविख्यातानां संस्कृतपण्डितानां पण्डित-वासुदेवशास्त्रि-अभ्यंकराणां संस्कृतपाठशालायाम् एतैः पाणिनीय-व्याकरणे वेदेषु च प्रावीण्यं संपादितम् । एतत् च प्रावीण्यं चित्रावशास्त्रिभिः ज्ञानकोशकाराणां डॉ. श्री. व्यं. केतकरमहोदयानां मार्गदर्शनेन अद्ययावन्नवीनया संशोधनपद्धत्या साद्गुण्यताम् आपादितम् । एक-नव-द्वि-एकतमे ख्रिस्ताब्दे तैः डॉ. केतकराणां महाराष्ट्रीय-ज्ञानकोशमण्डले सहसंपादकत्वेन वैदिक-संशोधनकार्यधुरं निर्वोढुं प्रारब्धम् । तत्र प्रस्तावना-खण्डे द्वितीयः भागः तथा च तृतीयभागे दाशराज्ञयुद्धं वैदिकी शब्दसृष्टिः च इति प्रकरणद्वयम् एतैः एव लिखितम् ।

चित्रावशास्त्रिभिः स्वीयं स्वतन्त्रं कोशकार्यं कै. म. म. श्रीधरशास्त्रि-

पाठकमहोदयानां सहकार्येण विरचितेन पतञ्जलिमहाभाष्यस्य 'महाभाष्य-शब्दकोश'-प्रकाशनेन तथा च पाणिनीयाष्टाध्यायीकोशः, गणकोशः च इति कोशद्वयप्रकाशनेन आविष्कृतम् । 'गव्हर्मेण्ट ओरिएण्टल सीरीज' प्रकाशने ते ग्रन्थाः प्राकाश्यं गताः ।

शास्त्रिभिः एक-नव-द्वि-अष्टमिते ख्रिस्ताब्दे प्रथमम् एव ऋग्वेदस्य मराठी-भाषायाम् अनुवादः कृतः । अधुना अस्मिन् एव ख्रिस्ताब्दे अस्य ग्रन्थराजस्य द्वितीया आवृत्तिः अपि प्राकाश्यं गता ।

महाराष्ट्रीय-ज्ञानकोशेन विवरणात्मक-कोशसाहित्यस्य या परंपरा प्रस्थापिता आसीत् सा शास्त्रिमहोदयैः 'भारतीय-चरित्रकोशाख्येन प्राचीन-मध्ययुगीन-अर्वाचीनेति त्रिखण्डात्मकेन व्यक्तिचरितज्ञानकोशेन अग्रे नीत्वा प्रचालिता । वैदिककालम् आरभ्य आंग्लशासनान्तं यावत् भारतीयानां चरित्रचित्रणे एतत् प्रचण्डं कोशत्रयं प्रायः अप्रमादित्वेन साधारत्वेन नूत्नप्रत्नसंशोधनपद्धतिसमन्वयेन च विख्यातं तिष्ठति । 'प्राचीन-चरित्रकोशस्य' परिवर्धिता हिन्दी आवृत्तिः एक-नव-षट्-पञ्चमिते ख्रिस्ताब्दे प्राकाश्यं गता । अहिन्दी-प्रान्ते निर्मितेषु हिन्दी-ग्रन्थेषु सर्वोत्कृष्टः अयम् इति मध्यप्रदेशशासनेन पारितोषिक-प्रदानेन गौरवितः अयं ग्रन्थः एक-नव-षट्-सप्तमिते ख्रिस्ताब्दे ।

शास्त्रिभिः संपादितः 'प्राचीन-भारतीय-स्थलकोशः' प्राचीन-भूगोल-ज्ञानकोशत्वेन एतद्वर्षान्ते प्राकाश्यं प्रतीक्षते ।

विदुषा संशोधकेन केवलम् एकाम् एव ज्ञानशाखाम् आश्रित्य संशोधनसंकोचः न विधातव्यः । संशोधनं नाम सर्वाङ्गीणं, व्यापकं, समाजाभिमुखं च स्यात् इति श्रद्धया शास्त्रिमहोदयैः गतचत्वारिंशद्वर्षाणि यावत् इदं व्रतम् आचरितम् आचर्यते च ।

नित्यकर्म-संस्कार-धर्मादिविषयात्मकानि एतेषां पुस्तकानि सूक्ष्माभ्याससूचकानि समाजोपयुक्तानि च सन्ति ।

एक-नव-त्रि-एकमिते एक-नव-चतुः सप्तमिते च ख्रिस्ताब्दयोः शास्त्रिमहोदयाः चिदम्बरशङ्कराचार्यैः पुरीशङ्कराचार्यैः च यथाक्रमं विद्यानिधि-महामहोपाध्यायाख्य-पदवीद्वयेन सम्मानिताः । एक-नव-षट्-पञ्चमिते ख्रिस्ताब्दे भारतस्य राष्ट्रपतिभिः एते सम्मानपत्रकेण गौरविताः ।

चित्रावशास्त्रिणाम् एतद्वैदुष्यगौरवार्थं निर्मापितः "दि रिव्ह्यू ऑफ इण्डोलॉजिकल रीसर्च इन दि लास्ट सेव्हण्टीफाइव् इअर्स" नामकः

ग्रन्थः एतेभ्यः भारतस्य राष्ट्रपतिभिः पैगम्बरवासि-डॉ. झाकीर हुसेन-महोदयैः एक-नव-षट्-सप्तमिते ख्रिस्ताब्दे ऑगस्टमासस्य त्रयोविंशे दिने ससमारोहं समर्प्य सम्मानिताः एते।

एवं सर्वथा एव एते महाभागाः पूर्वोक्तगौरवार्हाः इत्यत्र नास्ति कश्चित् संशीतिलेशः अपि। इदानीम् अद्य अत्रोपस्थितान् पण्डित-सिद्धेश्वर-विष्णु-चित्रावशास्त्रि-महाभागान् 'डी. लिट्.' इति गौरवोपाधिसमर्पणेन संमानयेयुः कुलपतिमहोदयाः इति मया सविनयं प्रार्थ्यते।"

(२५ मे १९६९)

---

## पं. का. र. वैशम्पायनेभ्यः क्षेमपृच्छा

भवतामूरुभङ्गस्य वार्ता श्रुत्वा दिनान्तरे।
दुःखाहतं च चिन्तायाः काष्ठामधिगतं मनः॥ १

स्वार्थत्यागैकबुद्धिर्हि कर्तव्यैकपरायणः।
हालाहलपिपासुश्च साधितुं लोकमङ्गलम्॥ २

विरलः सरलोऽन्यत्र भूमिदेवो भवादृशः।
सेवायैर्विहिता नित्यं देशस्य स्वजनस्य च॥ ३

गीर्वाणभारती राष्ट्रभारती राष्ट्रवर्धनम्।
कुरुतामिति मन्त्रस्य क्रियावान् उपदेशकः॥ ४

रुग्णशय्यां यथाशीघ्रं विहाय पुनराप्तवान्।
पूर्वसत्त्वं यथापूर्वं काशीनाथो भवेदिति॥ ५

प्रार्थ्यते परमेशानः श्रीदुर्गा च रघूत्तमः।
श्रद्धां दधानेन मया काशीनाथे भवत्यपि॥ ६

४१३ गङ्गावेस
कोल्हापुरम्

— डॉ. त्र्यं वि. द्रविड

# शब्दरत्नप्रौढमनोरमाप्रशस्तिः

मम प्रियसुहृद्भिः श्रीयुतवेङ्कटेशलक्ष्मणशास्त्रिजोशीमहाशयैः प्रकाशितः प्रौढमनोरमाव्याख्यानस्य शब्दरत्नस्य प्रथमो भागः मया अवालोकि ।

अमी किल लण्डन्विश्वविद्यालये स्वस्य संस्कृताध्यापकतया अवस्थानसमये तत्रत्ये 'इण्डिया ऑफीस' ग्रन्थालये अन्यत्र च एतद्ग्रन्थहस्तलेखमातृकाः महता प्रयत्नेन समचिन्वन् पर्यशीलयंश्च ताः पाश्चात्यया सरण्या । तस्यायं फलभूतः प्रथमो भागः । अन्ये चावशिष्टाः अचिरादेव विद्वल्लोकलोचनगोचरीभवेयुः इति मन्ये ।

नात्र कश्चित्संशयलेशोऽपि यदयं ग्रन्थः बहुभिः पाठभेदैः संयोजितः । सम्यक्संशोधितश्च अपूर्वो ग्रन्थः वैयाकरणानां माणवकानाम् अध्यापकानां च महते मोदाय उपकाराय च कल्पेत इति ।

संपादकानां श्रीवेङ्कटेशलक्ष्मणजोशीशास्त्रिणाम् उद्यमः नैतद्ग्रन्थप्रकाशनमात्रेण उपारमत् । अपि तु व्याप्रियत सुदूरं ततोऽपि विद्वज्जनोपकृतये । तथा हि—ग्रन्थस्यास्य प्रस्तावनायां पाश्चात्यमात्रक्षुण्णः यः मातृकाग्रन्थसंग्रहण - तद्राशीकरण - तद्वंशवृक्षशाखोपशाखादिनिर्धारणेषु पन्थाः अक्षुण्णश्च भारतीयप्राचीनपण्डितैः, सः सुविस्तरं सरलया प्रतिपादनरीत्या परिचयं प्रापितः प्राचीनपण्डितानाम् इति अधिकोऽयं लाभः ।

तथा अन्ते च पञ्चसु परिशिष्टेषु 'शब्दरत्न-लघुशब्दरत्नयोः कर्तृभेदे' तैः कृतः विचारः उल्लिखितानि उपष्टम्भकप्रमाणानि, भावप्रकाशग्रन्थपरिशीलनम्, इत्येतत् सर्वं तेषां विमर्शनकौशलं सुष्ठु आविष्करोति ।

तथा अनुबद्धः 'परिभाषाकोशः' अपरिचिताङ्ग्लभाषाणां संस्कृतपण्डितानां वस्तुतः 'कोशागारः' एव भवेदिति निश्चप्रचम् ।

अन्ये च ये अपेक्षिताः अंशाः तेऽपि संयोजिताः अत्रेति प्रायः समग्राङ्गोयं ग्रन्थः प्रकाशितः इति श्रीवेङ्कटेशलक्ष्मणशास्त्रिणः सर्वान् वैयाकरणान् तेषां अधमर्णान् अकुर्वन् इति अभिनन्दामि तान् हार्देन भावेन । जीयादयं ग्रन्थः जीयासुश्चास्य प्रकाशकाः सुचिरम् इत्याशास्यते ।

**संस्कृत-कोष-विभागः,** **क. अ. शिवरामकृष्णशास्त्री,**

**पुण्यपत्तनम् ६** **डेक्कन् कॉलेज्**

# सशब्दरत्नप्रौढमनोरमायाः परिचयः

(प्रथमः भागः पञ्चसन्ध्यन्तः)

संपादकः पं. वेङ्कटेशशास्त्री जोशी
प्रकाशकः डॉ. सु. मं. कत्रे दक्षिणामहाविद्यालयः पुण्यपत्तनम् ६
मूल्यम्–त्रिंशत् रूप्यकाणि ( रु. ३०।– )



स्व. पं. लक्ष्मणशास्त्रिगुरुचरणाः



पं. वेङ्कटेशशास्त्री जोशी

मम सुहृदुत्तमैः पं. वेङ्कटेशलक्ष्मण जोशीमहोदयैः सशब्दरत्न-प्रौढमनोरमाग्रन्थस्य पञ्चसन्ध्यन्तः प्रथमः भागः संपादितः, दक्षिणामहा-विद्यालस्य पदव्युत्तराध्ययन-संशोधन-विभागद्वारा डॉ. सुमित्र मं. कत्रे महोदयैः च प्रकाशं नीतः मया आमूलचूलम् आलोकितः। अमन्दश्चानन्द-सन्दोह आसादितः।

इदं प्रथमतया नूतन-संशोधन-पूर्वकं प्रकाशं नीतेऽस्मिन् व्याकरण-शास्त्रग्रन्थरत्ने शब्दरत्ने प्राचीनानाम् आधुनिकानां च विदुषां महती खलु उत्कण्ठा। सेयम् उत्कण्ठा अनेनांशिकेन प्रकाशनेनांशतोऽपि शाम्येत् उत्तरांशजिज्ञासया च भूयोऽवश्यं वर्धेत इति द्रढीय आशासे।

श्रीमतां भट्टोजीदीक्षितानां वैयाकरणसिद्धान्तकौमुदी-ग्रन्थेन प्रायः त्रिभ्यः संवत्सरशतकेभ्यः पूर्वं पाणिनीयव्याकरणशास्त्रस्याध्ययनाध्यापन-परंपरायां महान् विपरिवर्तः इव समजनि।

कौमुदी यदि कण्ठस्था वृथा भाष्य-परिश्रमः।

कौमुदी यद्यकण्ठस्था वृथा भाष्य-परिश्रमः। इति प्राचीन-परंपराप्रसिद्धेऽस्मिन् श्लोकाभाणके उपवर्णिता ग्रन्थस्यास्य महिष्ठा प्रतिष्ठा समेषां विदुषां संमता एव। ततश्च ग्रन्थेनानेन महाभाष्यमपि प्रत्याख्यातमिवाजायत। तस्यां सिद्धान्तकौमुद्यां यदुक्तमस्पष्टं सन्दिग्धं यद्वा सर्वथानुक्तं तत्पूरयितुं स्वोपज्ञटीका प्रौढमनोरमानाम्नी श्रीमद्भिर्भट्टोजीदीक्षितैः विरचिता विराजते अधीयते च वैयाकरणनिकाये। तस्मिन्नपि प्रौढमनोरमाग्रन्थे उक्तानुक्तदुरुक्तं चिन्तयितुं भट्टोजीदीक्षितानां शिष्यप्र-शिष्यादिभिः अन्यैः च पण्डितैः काश्चन टीका विलिखिताः। प्रायः ताः सर्वा अपि इतः पूर्वं नैकवारं नैकाभिष्टीकाभिरुपबृंहिताः प्रकाशिता अभ्यसिषूणां विपश्चितां सुप्रापाः ऋते शब्दरत्नादस्मात् भट्टोजीदीक्षितप्रशिष्यैः हरिदीक्षितैः प्रणीतात्।

ग्रन्थस्यास्य हस्तलिखितं महता सुदैवपरिपाकवशात् व्याकरण-मीमांसादिशास्त्रेषु संततविद्यादानानुगृहीत-नैक-शिष्य-गणैः गुरुचरणैः देवभूयं गतैः पं. लक्ष्मणशास्त्रिजोशीमुरगुडकरमहोदयैः बहुभ्यः संवत्सरेभ्यः पूर्वम् अचिन्तितमेवाधिगतम्। महती किलास्था तेषामत्र ग्रन्थरत्ने। महीयः खलु प्रयतितं तैः तस्य प्रकाशने, परं नाधिगता सफलता तैः तदात्वे परिस्थितिविशेषवशात्। तामिमां तेषां द्रढीयसीम् इच्छां पूरयितुं संततमभियुक्ताः तेषां सुपुत्राः महत्साफल्यमधिगता इत्यहो एकेन यत्नेनर्णद्वयम् अपाकृतमित्येव प्रत्येमि। इत अनन्तरम् अखिलस्यास्यावशिष्टस्य ग्रन्थस्य प्रकाशनेन निरतिशयं समाधानं विन्दतां गुरुवर्याणां देवभावं गत अन्तरात्मा इत्येकैवोत्कण्ठा सप्रश्रयम् आविष्क्रियते सांप्रतम्।

प्राचीनशास्त्रीयहस्तलिखितानां प्रकाशनं नाम दुश्चरं तप एव। तत्रापि कठिनतरव्याकरणशास्त्रे टीकाप्रटीका-युक्तस्य दुर्लभहस्तलिखितान्तरस्य। यस्य ग्रन्थकर्तुः अन्ये केचन ग्रन्थाः प्रकाशितचराः, यो वा ग्रन्थः अध्ययनाध्यापनसरण्यां कृतपदः यस्य हस्तलिखितान्तराणि इतस्ततो विप्रकीर्णानि भूयांसि बहूनि वा पूर्णरूपेण सुलभानि तादृशानां हस्तलिखितानां प्रकाशने भूयसी सुकरता भवति। परं प्रस्तुतशब्दरत्नविषये सुकरताया एकमपि कारणं नोपलभ्यते, यद्यपि लघुशब्दरत्ननाम्नी मनोरमाटीका बहुत्र प्रकाशिता तथापि सा किं हरिदीक्षितरचिता उताहो व्याकरण-

कुलप्रसिद्धिम् अनुसृत्य नागोजीभट्ट विरचिता इति विवादास्पदम्, अतः न तस्यात्र प्रकाशने संदिग्धपाठादीन् निर्णेतुं प्रमाणरूपेणावलम्बः सुशकः। एकमेव हस्तलिखितं तच्चापि अशुद्धिबहुलं वर्णाक्षरादीनां त्रुट्यादिदोषप्रचुरम् अगत्या प्रमाणीकृत्य प्रकाशयितुं कृतसंकल्पाः ते पं. वेंकटेशशास्त्रिजोशीमहाभागाः प्रयत्नविशेषेणान्येषां विदुषां सौजन्येन वा चत्वारि हस्तलिखितान्तराणि लब्धवन्त इत्यहो द्रढीयः संकल्पिते साधुतरे कर्मणि दैवानुकूलता। तैः त्रीणि संवत्सराणि लण्डननगरे अध्यापनस्य कृते वस्तुम् अवसरो लब्धः,। अस्मिन् शोभनेऽवसरे तैः तत्रत्य-ग्रन्थालये विद्यमानं प्रस्तुतग्रन्थस्य हस्तलिखितान्तरं समासाद्य तच्च सूक्ष्मेक्षिकया लब्धपूर्वेण स्वकीयहस्तलिखितेन संधाय यदध्ययनम् अकारि तद् यत्सत्यं लब्धस्य तस्य शोभनावसरस्य सर्वथा साफल्यमेव। अन्यान्यपि त्रीणि इति आहत्य पञ्च हस्तलिखितानि तैः संप्राप्तानि, तानि अवलम्ब्य संपादितम् एतद् ग्रन्थरत्नम्।

प्रकाशितस्य ग्रन्थस्य मुख्यः भागः नाम पञ्चसन्ध्यन्ता मनोरमा तत्र च शब्दरत्नटीका अधिगतेषु पञ्चसु हस्तलिखितेषु उपलब्धानां भिन्न-विभिन्न-पाठानां प्रतिपृष्ठम् अधोभागे यथायथं निर्देशः, भागोऽयं व्याकरणशास्त्रजिज्ञासूनामवश्यमुपकारीस्यादेव परं ग्रन्थस्यास्य दशाधिकशतं पृष्ठानि प्रस्तावना, अन्ततः च शतं पृष्ठानि पञ्च परिशिष्टानि

इमावाद्यन्तौ भागौ वस्तुतः स्वतन्त्रग्रन्थ-गौरवमेवार्हतः, ग्रन्थसंपादनविषये या काचन नूतना सरणिः शास्त्रपदवीं प्रापिता वर्तते आधुनिकैर्विद्वद्भिः, सा अत्र साररूपेण प्रसन्नया सरलया च सुरगिरा ऐदंप्राथम्येन सग्रथिता प्राचीनविदुषां विशिष्य आङ्ग्लभाषया सर्वथा अपरिचितानां महते बोधाय मोदायापि कल्पेत । यतः प्रायः प्राचीना विद्वांसः एवंकारमभिमन्यन्ते यत् 'असंदिग्धा प्रमाणपूता शास्त्रसरणिः नाम प्राचीना एव, नूतनानि शास्त्राणि संशयबहुलानि, प्रमाणशिथिलानि न कदापि अध्यवसायात्मिकां बुद्धिं जनयितुमलं कल्पेरन्' इति । परमयं तेषामभिमानः अत्र ग्रन्थे प्रस्तावनायां परिशिष्टेषु च कृतं विषयविवेचनं पठित्वा अवश्यमेव शैथिल्यं यायात्, ते चापि विमृशेयुः नवीनायां विचारपद्धतौ काचन शास्त्रीयाभ्यास सरणिरवश्यं स्यात्, अथ च विपरीतमेव वक्तव्यं तर्हि तदुभयत्रापि वक्तुं सुशकम् न केवलं नवीनायामेव, श्रीमताभर्तृहरिणाप्यभ्यधायि 'विपरीतं च सर्वत्र शक्यते वक्तुमागमे' (वा. प. १.१४०)

प्रस्तावनायां हस्तलिखितानाम् आद्यं, शाखा, प्रशाखा, उपशाखा इत्यादि परंपरा, पाठभेदाः, कालनिर्णयः, साम्यं, वैषम्यम् लेखनिका औत्तरीया उत दाक्षिणात्या इत्यादिविषयाः परामृष्टाः, तत्र च सर्वत्र एव संपादक-महोदयस्य समुचितं निर्णयमनुधावन्ती सूक्ष्मा बुद्धिः प्रतीता भवति । तत्रापि जमां जमीति जकारलेखं हेतूकृत्य (प्रस्तावना १५) दण्डरूपं बिन्दुरूपं वा विरामचिह्नमभिलक्ष्य (प्रस्तावना पृ. ५०) कृतो विमर्शः 'अणुरपि विशेषोऽध्यवसायकरः' इति न्यायमेव स्मारयेत् प्राचीनप्रणालीप्रज्ञाप्राज्ञम् । पञ्चसु परिशिष्टेषु त्रीणि परिशिष्टानि शब्दरत्नलघुशब्दरत्नयोः ग्रन्थयोः बहिरङ्गान्तरङ्गाभ्यासाय नितरामुपयुक्तानि, चतुर्थे परिशिष्टे तावत् नूतनस्य ग्रन्थसंपादनशास्त्रस्य आङ्ग्लभाषायां ये पारिभाषिकाः शब्दाः रूढाः तेषां समुचितार्थबोधकाः संस्कृत-शब्दाः ग्रन्थसंपादकेन ससूचिताः, पञ्चमं परिशिष्टं विविध-सूची-युक्तमिति सर्वमेव प्रकरणजातम् अभ्यासायोपकुर्यादिति नात्र वर्णनाप्यनर्थकेन भवितव्यम् ।

नितरां हार्दमभिनन्दनमत्र कठिनतरे वस्तुनि दृढमभियुक्तस्यास्य संपादक-महोदयस्य ।

प्रा. वामनशास्त्री भागवत

टिळक-विद्यापीठम्
पुण्यपत्तनम् ३०

राष्ट्रियम् ऐक्यम्

आर्थिक–समृद्धिः

सामाजिक–न्यायः



**भारतीयस्वातन्त्र्यस्य आधारस्तम्भत्रयम्**

**२२ तमे स्वातन्त्र्यदिने राष्ट्रसेवाव्रतार्थं**

**नूत्नेन उत्साहेन स्वात्मानं समर्पयामः ।**

प्रसिद्धि-संचालनालयः महाराष्ट्रशासनम्, मुम्बापुरी ३२

पुण्यपत्तन-नगर-छाटण-कार्यालयाय २५–८–६९ दिने समर्पितम्

शारदा - (पुण्यपत्तनम् ३०.) १०–१९ : २० ★ रजि. क्र. एम्. एच्. ५५७
● लायसेन्स क्र. १३७ टु पोस्ट विदौट प्रीपेमेण्ट.



संपादकः मुद्रकः प्रकाशकः स्वामी – वसन्त अनन्त गाडगीळ
मुद्रणस्थलम्– यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् ३०.
प्रकाशनस्थलम्-१ म.म. प्रा.द.वा.पोतदार, ४९८ शनिवार, पुण्यपत्तनम् ३०
२.–श्री. ल.म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४.
कार्यालयः — [illegible]